गी० ॥ नतु मामभिजानंति तत्वेनातश्च्यवं
९१ ति ते ॥२४॥ यांति देवव्रता देवान्पितॄं
न्यांति पितृव्रताः ॥ भूतानि यांति भूते
ज्या यांति मद्याजिनोपि मां ॥२५॥ पत्रं
पुष्पं फलं तोयं यो मे भक्त्या प्रयछति त
दहं भक्त्युपहृतमश्नामि प्रयतात्मनः
॥२६॥ यत्करोषि यदश्नासि यज्जुहोषि
ददासि यत् ॥ यत्तपस्यसि कौंतेय तत्

त्कुरुष्व मदर्प्पणं ॥२७॥ शुभाशुभफ
लैरेवं मोक्ष्यसे कर्म्मबंधनैः ॥ संन्यासयो
गयुक्तात्मा विमुक्तो मामुपैष्यसि ॥२८॥
समोहं सर्वभूतेषु न मे द्वेष्योस्ति न प्रियः
॥ ये भजंति तु मां भक्त्या मयि ते तेषु चा
प्यहं ॥२९॥ अपि चेत्सुदुराचारो भजते
मामनन्यभाक् साधुरेव स मंतव्यः स
म्यग्व्यवसितो हि सः ॥३०॥ क्षिप्रं भवति

गी० ९ धर्मात्मा शश्वछांतिं निगछति ॥ कौंतेय
९२ प्रतिजानीहि न मे भक्तः प्रणश्यति ॥
॥३१॥ मांहि पार्थ व्यपाश्रित्य येपि स्युः
पापयोनयः ॥ स्त्रियो वैश्यास्तथा शूद्रा
स्तेपि यांति परां गतिं ॥३२॥ किं पुन
र्ब्राह्मणाः पुण्या भक्ता राजर्षयस्तथा
॥ अनित्यमसुखं लोकमिमं प्राप्य भज
स्व मां ॥३३॥ मन्मना भव मद्भक्तो मद्या

जी मां नमस्कुरु ॥ मामेवैष्यसि युक्त्वै
वमात्मानं मत्परायणः ॥ ३४ ॥ इति
श्रीभगवद्गीतासूपनिषत्सु ब्रह्म
विद्यायां योगशास्त्रे श्रीकृष्णार्जुन
संवादे राजविद्याराजगुह्ययोगो ना
म नवमोध्याय ॥ ९ ॥ श्रीभगवानु
वाच ॥ भूय एव महाबाहो शृणु मे पर
मं वचः ॥ यत्तेहं प्रीयमाणाय वक्ष्यामि

गी० १० हितकाम्यया ॥१॥ नमे विदुः सुरगणाः
६३ प्रभवं न महर्षयः ॥ अहमादिर्हि देवानां
महर्षीणां च सर्वशः ॥२॥ यो मामजम
नादिं च वेत्ति लोकमहेश्वरं असंमूढः
स मर्त्येषु सर्वपापैः प्रमुच्यते ॥३॥ बु
द्धिर्ज्ञानमसंमोहः क्षमा सत्यं दमः शा
म ॥४॥ अहिंसा समता तुष्टिस्तपो दा
नं यशोयशः ॥५॥ महर्षयः सप्त पूर्वे

चत्वारो मनवस्तथा ॥ मद्भावा मानसा जाता
येषां लोक इमाः प्रजाः ॥६॥ एतां विभू
तिं योगं च मम यो वेत्ति तत्वतः ॥ सो विकं
पेन योगेन युज्यते नात्र संशयः ॥७॥ अ
हं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्त्तते ॥ इति
मत्वा भजंते मां बुधा भावसमन्विताः ॥८
मच्चित्ता मद्गतप्राणा बोधयंतः परस्परं ॥
कथयंतश्च मां नित्यं तुष्यंति च रमंति च ॥

गी० १०

८४

॥९॥ तेषां सततयुक्तानां भजतां प्रीति
पूर्वकं ददामि बुद्धियोगं तं येन मामुपया
न्ति ते ॥१०॥ तेषामेवानुकंपार्थमहम
ज्ञानजं तमः ॥ नाशयाम्यात्मभावस्थो ज्ञा
नदीपेन भास्वता ॥११॥ अर्जुन उवा
च ॥ परं ब्रह्म परं धाम पवित्रं परमं भवान्
॥ पुरुषं शाश्वतं दिव्यमादिदेवमजं वि
भुं ॥१२॥ आहुस्त्वामृषयः सर्वे देवर्षि

नीरदस्तथा ॥ असितो देवलो व्यासः
स्वयं चैव ब्रवीषि मे ॥१३॥ सर्वमेत
दृतं मन्ये यन्मां वदसि केशव न हि ते
भगवन् व्यक्तिं विदुर्देवा न दानवाः
॥१४॥ स्वयमेवात्मनात्मानं वेत्थ त्वं पुरु
षोत्तम ॥ भूतभावन भूतेश देव
देव जगत्पते ॥१५॥ वक्तुमर्हस्य
शेषेण दिव्या ह्यात्मविभूतयः ॥

गी० याभिर्विभूतिभिर्लोकानिमांस्त्वंव्या
९५ प्यतिष्टसि ॥१६॥ कथंविद्यामहंयो
गिंस्त्वांसदापरिचिंतयन् ॥ केषुके
षुचभावेषुचिंत्योसिभगवन्मया
॥१७॥ विस्तरेणात्मनोयोगंविभूतिं
चजनार्दनभूयः ॥ कथयतृप्तिर्हि
शृण्वतोनास्तिमेमृतं ॥१८॥ श्रीभ
गवानुवाच ॥ हंततेकथयिष्यामि

दिव्याह्यात्मविभूतयः ॥ प्राधान्यतः
कुरुश्रेष्ठ नास्त्यंतो विस्तरस्य मे ॥१९॥
अहमात्मा गुडाकेश सर्वभूताशय
स्थितः ॥ अहमादिश्च मध्यं च भूताना
मंत एव च ॥२०॥ आदित्यानामहं वि
ष्णुर्ज्योतिषां रविरंशुमान् मरीचिर्म
रुतामस्मि नक्षत्राणामहं शशी ॥२१
॥ वेदानां सामवेदोस्मि देवानामस्मि

गी० ९८

वासवः ॥ इंद्रियाणां मनश्चास्मि भूता

नामस्मि चेतना ॥२२॥ रुद्राणां शंक

रं करश्चास्मि भूतानामस्मि चेतना

वित्तेशो यक्षरक्षसां ॥ वसूनां पावक

श्चास्मि मेरुः शिखरिणामहं ॥२३॥

पुरोधसां च मुख्यं मां विद्धि पार्थ बृहस्प

तिं ॥ सेनानीनामहं स्कंदः सरसामस्मि

सागरः ॥२४॥ महर्षीणां भृगुरहं ॥

गिरामस्म्येकमक्षरं ॥ यज्ञानां जपय
ज्ञोस्मि स्थावराणां हिमालय ॥२५॥ अ
श्वत्थः सर्ववृक्षाणां देवर्षीणां च नार
दः ॥ गंधर्वाणां चित्ररथः सिद्धानां कपि
लो मुनिः ॥२६॥ उच्चैःश्रवसमश्वानां
विद्धि माममृतोद्भवं ॥ ऐरावतं गजेंद्रा
णां नराणां च नराधिपं ॥२७॥ आ
युधानामहं वज्रं धेनूनामस्मि काम

गी०७ धुक् ॥ प्रजनश्चास्मि कंदर्पः सर्पाणा-
९७ मस्मि वासुकिः ॥२८॥ अनंतश्चास्मि
नागानां वरुणो यादसामहं पितॄणा
मर्यमा चास्मि यमः संयमतामहं ॥२
९॥ प्रह्लादश्चास्मि दैत्यानां कालः क
लयतामहं ॥ मृगाणां च मृगेंद्रोहं वै
नतेयश्च पक्षिणां ॥३०॥ पवनः पव
तामस्मि रामः शस्त्रभृतामहं ॥ झषा

णां मकरश्चास्मि स्त्रोतसामस्मि जाह्नवी
॥३१॥ सर्गाणामादिरंतश्च मध्यं चैवाह
मर्जुन ॥ अध्यात्मविद्या विद्यानां वादः प्र
वदतामहं ॥३२॥ अक्षराणामकारोस्मि
द्वंद्वः सामासिकस्य च ॥ अहमेवाक्षयः
कालो धाताहं विश्वतोमुखः ॥३३॥ मृत्युः
सर्वहरश्चाहमुद्भवश्च भविष्यतां ॥ की
र्त्तिः श्रीर्वाक्च नारीणां स्मृतिर्मेधा

गी० ९८

धृतिक्षमा ॥३४॥ बृहत्सामतथासाम्नां
गायत्रीछंदसामहं ॥ मासानांमार्गशी
र्षोहमृतूनांकुसमाकर ॥३५॥ द्यूतंछ
लयतामस्मितेजस्तेजस्विनामहं ॥ जयो
स्मिव्यवसायोस्मिसत्वंसत्ववतामहं ॥
३६॥ वृष्णीनांवासुदेवोस्मिपांडवानां
धनंजय ॥ मुनीनामप्यहंव्यासः कवीनां
मुशनाकविः ॥३७॥ दंडोदमयताम

स्मिनीतिरस्मिजिगीषतां ॥ मौनंचैवास्मि
गुह्यानांज्ञानंज्ञानवतामहं ॥३८॥ यच्चा
पिसर्वभूतानांबीजंतदहमर्जुन ॥ नत
दस्तिविनायत्स्यान्मयाभूतंचराचरं ॥
३९॥ नांतोस्तिममदिव्यानांविभूती
नांपरंतप ॥ एषतूद्देशतःप्रोक्तोविभू
तेर्विस्तरोमया ॥४०॥ यद्यद्विभूतिमत्स त्स
त्वंश्रीमदूर्जितमेववा ॥ तत्तदेवावग

गी० १० ष्ठ त्वं मम तेजोंशसंभवं ॥४१॥ अथवा
९९ बहुनैतेन किं ज्ञातेन तवार्जुन विष्टभ्या
हमिदं कृत्स्नमेकांशेन स्थितो जगत्
॥४२॥ इति श्री भगवद्गीतासूपनि
षत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृ
ष्णार्जुनसंवादे विभूतियोगो नाम
दशमोऽध्यायः ॥१०॥ अर्जुन उवा
च ॥ मदनुग्रहाय परमं गुह्यमध्यात्म

संज्ञितं ॥ यत्त्वयोक्तं वचस्तेन मोहोयं
विगतो मम ॥१॥ भवाप्ययौ हि भूतानां
श्रुतौ विस्तरशो मया ॥ त्वत्तः कमल
पत्राक्ष माहात्म्यमपि चाव्ययं ॥२॥ ए
वमेतद्यथात्थ त्वमात्मानं परमेश्वर ॥
द्रष्टुमिछामि ते रूपमैश्वरं पुरुषोत्तम
॥ मन्यसे यदि तछक्यं मया द्रष्टुमिति प्र
भो ॥ योगेश्वर ततो मे त्वं दर्शयात्मानम

गी० ७ व्ययं ॥ श्री भगवानुवाच ॥ पश्य मे पा
१०० र्थ रूपाणि शतशोथ सहस्रशः ॥ ना
नाविधानि दिव्यानि नानावर्णाकृती
नि च ॥५॥ पश्यादित्यान्वसून्रुद्रा
नश्विनौ मरुतस्तथा ॥ बहून्यदृष्टपू
र्वाणि पश्याश्चर्याणि भारत ॥६॥ इहै
कस्थं जगत्कृत्स्नं पश्याद्य सचराचरं
॥ मम देहे गुडाकेश यच्चान्यद्द्रष्टुमि

छसि ॥७॥ न तु मां शक्यसे द्रष्टुमनेनै
व स्वचक्षुषा दिव्यं ददामि ते चक्षुः पश्य
मे योगमैश्वरं ॥८॥ संजय उवाच ॥ ए
वमुक्त्वा ततो राजन् महायोगेश्वरो ह
रिः ॥ दर्शयामास पार्थाय परमं रूपमैश्व
रं ॥९॥ अनेकवक्त्रनयनमनेकाद्भु
तदर्शनं ॥ अनेकदिव्याभरणं दिव्या
नेकोद्यतायुधं ॥१०॥ दिव्यमाल्यांबर

१०१ धरं दिव्यगंधानुलेपनं ॥ सर्वाश्चर्यमयं दे
गी० वमनंतं विश्वतोमुखं ॥११॥ दिवि सूर्य
सहस्रस्य भवेद्युगपदुत्थिता ॥ यदि भाः
सदृशी सा स्याद्भासस्तस्य महात्मनः ॥
१२॥ तत्रैकस्थं जगत्कृत्स्नं प्रविभक्त
मनेकधा ॥ अपश्यद्देवदेवस्य शरीरे पां
डवस्तदा ॥१३॥ ततः स विस्मयाविष्टो
हृष्टरोमा धनंजयः ॥ प्रणम्य शिरसा दे

वं कृतांजलिरभाषत ॥१४॥ पश्यामि
देवांस्तव देव देहे सर्वांस्तथा भूतवि
शेषसंघान् ॥ ब्रह्माणमीशं कमला
सनस्थमृषींश्च सर्वानुरगांश्च दिव्या
न् ॥१५॥ अनेकबाहूदरवक्त्रनेत्रं
पश्यामि त्वां सर्वतोनंतरूपं ॥ नांतं
नमध्यं नपुनस्तवादिं पश्यामि विश्वे
श्वर विश्वरूप ॥१६॥ किरीटिनं गदि

गी०११ नंचक्रिणंच ॥ तेजोराशिंसर्वतोदीप्ति
१०२ मंतं ॥ पश्यामित्वांदुर्निरीक्ष्यंसमंता
द्दीप्तानलार्कद्युतिमप्रमेयं ॥१७॥
त्वमक्षरंपरमंवेदितव्यंत्वमस्यवि
श्वस्यपरंनिधानं ॥ त्वमव्ययःशाश्व
तधर्मगोप्तासनातनस्त्वंपुरुषोमतो
मे ॥१८॥ अनादिमध्यांतमनंतवी
र्यमनंतबाहुंशशिसूर्यनेत्रं ॥ पश्या

मित्वांदीप्तहुताशवक्त्रंस्वतेजसावि
श्वमिदंतपंतं ॥१९॥ द्यावापृथिव्योरि
दमंतरंहिव्याप्तंत्वयैकेनदिशश्चसर्वा
दृष्ट्वाद्भुतंरूपमुग्रंतवेदंलोकत्रयं
प्रव्यथितंमहात्मन् ॥२०॥ अमीहित्वा
सुरसंघा।विशंतिकेचिद्भीताप्रांज
लयोगृणंतिस्वस्तीत्युक्त्वामहर्षि
सिद्धसंघाः॥ स्तुवंतित्वांस्तुतिभिः

गी०११ पुष्कलाभि ॥२१॥ रुद्रादित्या वसवो ये
१०३ च साध्या विश्वेश्विनौ मरुतश्चोष्मपाश्च
गंधर्वयक्षासुरसिद्धसंघा वीक्षंते त्वां
विस्मिताश्चैव सर्वे ॥२२॥ रूपं महत्ते
बहुवक्त्रनेत्रं ॥ महाबाहो बहुबाहूरु
पादं ॥ बहूदरं बहुदंष्ट्राकरालं दृष्ट्वा लो
काः प्रव्यथितास्तथाहं ॥२३॥ नभः
स्पृशं दीप्तमनेकवर्णं व्यात्ताननं दी

सविशालनेत्रं ॥ दृष्ट्वाहित्वांप्रव्यथि
तांतरात्माधृतिंनविंदामिशमंचवि
ष्णो ॥२४॥ दंष्ट्राकरालानिचतेमुखा
निदृष्ट्वैवकालानलसंनिभानि ॥ दि
शोनजानेनलभेचशर्मप्रसीददे
वेशजगन्निवास ॥२५॥ अमीचत्वां
धृतराष्ट्रस्यपुत्राःसर्वेसहैवावनि
पालसंघैःभीष्मोद्रोणःसूतपुत्र

गी०उ
१०४

स्त्रयासौसहासमदीयैरपियोधमुख्यैः
॥२६॥ वक्त्राणितेत्वरमाणाविशंति
दंष्ट्राकरालानिभयानकानिकेचि
द्विलग्नादशनांतरेषुसंदृश्यंतेचूर्णि
तैरुत्तमांगैः ॥२७॥ यथानदीनांबहु
वोंबुवेगाःसमुद्रमेवाभिमुखाद्रवं
ति॥ तथातवामीनरलोकवीराविशं
तिवक्त्राण्यभिविज्वलंति ॥२८॥ य

थाप्रदीप्तंज्वलनंपतंगाविशंतिनाशा
यसमृद्धवेगाः ॥ तथैवनाशायविशंति
लोकास्तवापिवक्त्राणिसमृद्धवेगाः
॥२९॥ लेलिह्यसेग्रसमानःसमंताल्लो
कान्समग्रान्वदनैर्ज्वलद्भिः ॥ तेजोभि
रापूर्यजगत्समग्रंभासस्तवोग्राःप्रतपं
ति।विष्णो ॥३०॥ आख्याहिमेकोभवानु
ग्ररूपोनमोस्तुतेदेववरप्रसीद ॥ वि

गी० ज्ञातुमिच्छामि भवंतमाद्यं नहि प्रजानामि
१०५ तव प्रवृत्तिं ॥३१॥ श्रीभगवानुवाच ॥
कालोस्मि लोकक्षयकृत्प्रवृद्धो लोकान्
समाहर्त्तुमिह प्रवृत्तः ॥ ऋतेपि त्वां न भवि
ष्यंति सर्वे येवस्थिताः प्रत्यनीकेषु योधाः
॥३२॥ तस्मात्त्वमुत्तिष्ठ यशो लभस्व जि
त्वा शत्रून्भुंक्ष्व राज्यं समृद्धं ॥ मयैवैते
निहताः पूर्वमेव निमित्तमात्रं भव सव्य

साचिन ॥३३॥ द्रोणं च भीष्मं च जय
द्रथं च कर्णं तथान्यानपि योधवीरा
न्मया हतास्त्वं जहि मा व्यथिष्ठा युध्य
स्व जेतासि रणे सपत्नान् ॥३४॥ संज
य उवाच ॥ एतछ्रुत्वा वचनं केशवस्य
कृतांजलिर्वेपमानः किरीटी ॥ नम
स्कृत्वा भूय एवाह कृष्णं सगद्गदं भी
तभीतः प्रणम्य ॥३५॥ अर्जुन उवाच ॥

गी०) स्थाने हृषीकेश तव प्रकीर्त्या जगत्प्रहृ
१०६ ष्यत्यनुरज्यते च ।। रक्षांसि भीतानि दि
शो द्रवंति ।। सर्वे नमस्यंति च सिद्धसंघाः
।।३६।। कस्माच्च ते न नमेरन्महात्मन्
गरीयसे ब्रह्मणोप्यादिकर्त्रे ।। अनंत
देवेश जगन्निवास त्वमक्षरं सदसत्तत्प
रं यत ।।३७।। त्वमादिदेवः पुरुषः पुरा
णः ।। त्वमस्य विश्वस्य परं निधानं वे

त्तासिवेद्यंच ॥ परंचधामत्वयाततंविश्व
मनंतरूप ॥३८॥ वायुर्यमोग्निर्वरुणः
शशांकः प्रजापतिस्त्वंप्रपितामहश्च ॥ न
मोनमस्तेस्तुसहस्रकृत्वः पुनश्चभूयो
पिनमोनमस्ते ॥३९॥ नमः पुरस्तादथपृ
ष्ठतस्ते ॥ नमोस्तुतेसर्वतएवसर्वः अ
नंतवीर्यामितविक्रमस्त्वंसर्वंसमाप्नो
षिततोसिसर्वः ॥४०॥ सखेतिमत्वाप्रस

गी०११ भं यदुक्तं हे कृष्ण हे यादव हे सखेति ॥ अ
१०५ जानता महिमानं तवेदं मया प्रमादात्प्र
णयेन वापि ॥४१॥ यच्चावहासार्थमस
त्कृतोसि विहारशय्यासनभोजनेषु ॥ ए
कोथवाप्यच्युत तत्समक्षं तत्क्षामये त्वा
महमप्रमेयं ॥४२॥ पितासि लोकस्य चरा
चरस्य त्वमस्य पूज्यश्च गुरुर्गरीयान् ॥
न त्वत्समोस्त्यभ्यधिकः कुतोन्यो लोक

त्र्ये प्याप्तिमप्त्र्भाव ॥४३॥ तस्मात्त्र

णम्य प्रणिधाय कायं ॥ प्रसादये त्वाम

हमीशमीड्यं पितेव पुत्रस्य सखेव

सख्युः प्रियः प्रियायार्हसि देव सोढुं

॥४४॥ अदृष्टपूर्वं हृषितो स्मि दृष्ट्वा

येन च प्रव्यथितं मनो मे ॥ तदेव मे द

र्शय देवरूपं प्रसीद देवेश जगन्निवा

स ॥४५॥ किरीटिनं गदिनं चक्रहस्त

गी० इच्छामि त्वां द्रष्टुमहं तथैव तेनैव रू
१०८ पेण चतुर्भुजेन सहस्रबाहो भव वि
श्वमूर्ते ॥ श्रीभगवानुवाच ॥ मया
प्रसन्नेन तवार्जुनेदं रूपं परं दर्शित
मात्मयोगात् ॥ तेजोमयं विश्वमनंत
माद्यं यन्मे त्वदन्येन न दृष्टपूर्वं ॥४७॥
न वेदयज्ञाध्ययनैर्न दानैर्न च क्रिया
भिर्न तपोभिरुग्रैः ॥ एवंरूपः शक्य

अहं नृलोके द्रष्टुं त्वदन्येन कुरुप्र
वीर ॥४८॥ मा ते व्यथा मा च विमूढ
भावो दृष्ट्वा रूपं घोरमीदृङ् ममेदं व्य
पेतभीः प्रीतमनाः पुनस्त्वं तदेव मे रू
पमिदं प्रपश्य ॥४९॥ संजय उवाच ॥
इत्यर्जुनं वासुदेवस्तथोक्त्वा स्वकं रू
पं दर्शयामास भूयः ॥ आश्वासयामा
स च भीतमेनं भूत्वा पुनः सौम्यवपु

गी।११ महात्मा ।।५०।। अर्जुन उवाच ।। दृष्ट्वेदं
१०५ मानुषं रूपं तव सौम्यं जनार्दन ।। इदानी
मस्मि संवृत्तः सचेताः प्रकृतिं गतः ।।
५१।। श्रीभगवानुवाच ।। सुदुर्दर्श
मिदं रूपं दृष्टवानसि यन्मम ।। देवा अ
प्यस्य रूपस्य नित्यं दर्शनकांक्षिणः
।।५२।। नाहं वेदैर्न तपसा न दानेन न
न चेज्यया ।। शक्य एवंविधो द्रष्टुं दृष्ट

वानसि मांयथा ॥५३॥ भक्त्यात्वनन्यया

शक्यअहमेवंविधोर्जुन ॥ ज्ञातुंद्रष्टुंच

तत्वेन प्रवेष्टुंच परंतप ॥५४॥ मत्कर्म

कृन्मत्परमोमद्भक्तः संगवर्जितः

॥ निर्वैरः सर्वभूतेषु यः समासेतिपां

डव ॥५५॥ इतिश्रीभगवद्गीतासूप

निषत्सुब्रह्मविद्यायांयोगशास्त्रे

श्रीकृष्णार्जुनसंवादेविश्वरूपदर्शनोना

गी० नामैकादशोऽध्यायः ॥११॥ अर्जुन उ
११० वाच ॥ एवं सततयुक्ता ये भक्तास्त्वां प
र्युपासते ॥ ये चाप्यक्षरमव्यक्तं तेषां
के योगवित्तमाः ॥१॥ श्रीभगवानुवा
च ॥ मय्यावेश्य मनो ये मां नित्ययुक्ता
उपासते ॥ श्रद्धया परयोपेतास्ते मे युक्त
तमा मताः ॥२॥ ये त्वक्षरमनिर्देश्यमव्य
क्तं पर्युपासते ॥ सर्वत्रगमचिन्त्यं च कूट

स्थमचलं ध्रुवं ॥३॥ सन्नियम्येंद्रियग्रा
मं सर्वत्र समबुद्धयः ॥ ते प्राप्नुवंति मामे
व सर्वभूतहिते रताः ॥४॥ क्लेशोधिक
तरस्तेषामव्यक्तासक्तचेतसां ॥ अ
व्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्य
ते ॥५॥ ये तु सर्वाणि कर्माणि मयि
संन्यस्य मत्पराः अनन्येनैव योगेन
मां ध्यायंत उपासते ॥६॥ तेषामहं

गी॰ समुद्धर्त्ता ॥ मृत्युसंसारसागरात् ॥ भवा
१२१ मि न चिरात्पार्थ मय्यावेशितचेतसां
॥ ७ ॥ मय्येव मन आधत्स्व मयि बुद्धिं नि
वेशय ॥ निवसिष्यसि मय्येव अत ऊ
र्ध्वं न संशयः ॥ ८ ॥ अथ चित्तं समाधा
तुं न शक्नोषि मयि स्थिरं ॥ अभ्यास
योगेन ततो मामिच्छाप्तुं धनंजय ॥ ९ ॥
अभ्यासेप्यसमर्थोसि मत्कर्म परमो

नक॥मदर्थमपिकर्माणिकुर्वन्सिद्धिमवा
प्स्यसि॥१०॥अथैतदप्यसक्तोसिकर्त्तुंम
द्योगमाश्रितःसर्वकर्मफलत्यागंततः
कुरुयतात्मवान॥११॥श्रेयोहिज्ञानमभ्या
साज्ज्ञानाद्ध्यानंविशिष्यते॥ध्यानात्कर्म
फलत्यागस्त्यागाछांतिरनंतरं॥१२॥अद्वे
ष्टासर्वभूतानांमैत्रःकरुणएवच॥
निर्ममोनिरहंकारःसमदुःखसुखःक्ष

गी० मी ॥१३॥ संतुष्टः सततं योगी यतात्मा दृढ
११२ निश्चयः ॥ मय्यर्पितमनोबुद्धिर्यो मद्भक्तः
स मे प्रियः ॥१४॥ यस्मान्नोद्विजते लोको
लोकान्नोद्विजते च यः ॥ हर्षामर्षभयोद्वे
गैर्मुक्तो यः स च मे प्रियः ॥१५॥ अनपेक्षः
शुचिर्दक्ष उदासीनो गतव्यथः ॥ सर्वार
म्भपरित्यागी यो मद्भक्तः स मे प्रियः ॥१६॥
यो न हृष्यति न द्वेष्टि न शोचति न कांक्षति

सुभसुभपरित्यागीभक्तिमान्यःसमे
प्रियः ॥१७॥ समःशत्रौचमित्रेचतथा
मानापमानयोः ॥ शीतोष्णसुखदुः
खेषुसमःसंगविवर्जितः ॥१८॥ तुल्य
निंदास्तुतिर्मौनीसंतुष्टोयेनकेनचि
त् ॥ अनिकेतःस्थिरमतिर्भक्तिमान्मे
प्रियोनरः ॥१९॥ येतुधर्मामृतमिदंय
थोक्तंपर्युपासते ॥ श्रद्दधानामत्पर

गी० ७ मात्मकास्तेतीवमेप्रिया:॥२०॥इतिश्रीभ
११३ गवद्गीतासुपनिषत्सुब्रह्मविद्यायां
योगशास्त्रेश्रीकृष्णार्जुनसंवादेभ
क्तियोगोनामद्वादशोऽध्याय:॥१२॥
अर्जुनोवाच॥प्रकृतिंपुरुषंचैव
क्षेत्रंक्षेत्रज्ञमेवच॥१॥एतद्वेदितुमि
छामिज्ञानंज्ञेयंचकेशव॥१॥श्रीभग
वानुवाच॥इदंशरीरंकौंतेयक्षेत्रमि

त्यभिधीयते ॥ एतद्यो वेत्ति तं प्राहुः क्षेत्र
ज्ञमिति तद्विदः ॥२॥ क्षेत्रज्ञं चापि मां
विद्धि सर्वक्षेत्रेषु भारत क्षेत्रक्षेत्रज्ञ
योर्ज्ञानं यत्तज्ज्ञानं मतं मम ॥३॥ तत्
क्षेत्रं यच्च यादृक्च यद्विकारि यत
श्च यत् स च यो यत्प्रभावश्च तत्समा
सेन मे शृणु ॥४॥ ऋषिभिर्बहुधा गी
तं छन्दोभिर्विविधैः पृथक् ॥ ब्रह्मसूत्र

गी०
१९

पदैश्चैव हेतुमद्भिर्विनिश्चितैः ॥५॥ म
हाभूतान्यहंकारो बुद्धिरव्यक्तमेव च
॥ इंद्रियाणि दशैकं च पंचेंद्रियगोच
राः ॥६॥ इच्छा द्वेषः सुखं दुःखं संघातश्चे
तना धृतिः ॥ एतत्क्षेत्रं समासेन सवि
कारमुदाहृतं ॥७॥ अमानित्वमदंभि
त्वमहिंसा क्षांतिरार्जवं आचार्योपास
नं शौचं स्थैर्यमात्मविनिग्रहः ॥८॥

इंद्रियार्थेषु वैराग्यमनहंकार एवच ॥
जन्ममृत्युजराव्याधिदुःखदोषानुदर्शने
॥८॥ असक्तिरनभिष्वंगः पुत्रदारगृहा
दिषु ॥ नित्यं च समचित्तत्वमिष्टानिष्टो
पपत्तिषु ॥९॥ मयि चानन्ययोगेन भ
क्तिरव्यभिचारिणी ॥ विविक्तदेशसे
वित्वमरतिर्जनसंसदि ॥१०॥ अध्या
त्मज्ञाननित्यत्वं तत्वज्ञानार्थदर्शनं ॥

गी०
११५

एतज्ज्ञानमितिप्रोक्तमज्ञानंयदतोन्यथा
॥११॥ ज्ञेयंयत्तत्प्रवक्ष्यामियज्ज्ञात्वामृ
तमश्नुतेअनादिमत्परंब्रह्मनसत्तन्ना
सदुच्यते ॥१२॥ सर्वतःपाणिपादंतत्स
र्वतोक्षिशिरोमुखंसर्वतःश्रुतिमल्लो
केसर्वमावृत्यतिष्ठति ॥१३॥ सर्वेंद्रि
यगुणाभासंसर्वेंद्रियविवर्जितं ॥ अ
सक्तंसर्वभृच्चैवनिर्गुणंगुणभोक्तृच

||१५|| विहिरंतस्च भूतानामचरं चरमे
व च || सूक्ष्मत्वात्तदविज्ञेयं दूरस्थं चांति
के च तत ||१६|| •पुविभक्तं च तज्ज्ञेयं ग्र
सिष्णु प्रभविष्णु च ||१७|| ज्योतिषाम
पि तज्ज्योतिस्तमसः परमुच्यते || ज्ञानं
ज्ञेयं ज्ञानगम्यं हृदि सर्वस्य विष्ठितं ||
१८ इति क्षेत्रं तथा ज्ञानं ज्ञेयं चोक्तं स
मासतः || मद्भक्त एतद्विज्ञाय मद्भावा
× भूतेषु विभक्तं विभक्तमिव च स्थितं || भूतभर्तृ च × सो०२

गी० योपपद्यते ॥१९॥ प्रकृतिं पुरुषं चैव विद्ध्य
११६ नादीन्नुभावपि ॥ विकारांश्च गुणांश्चैव वि
द्धि प्रकृतिसंभवान् ॥२०॥ कार्यकारण
कर्तृत्वे हेतुः प्रकृतिरुच्यते पुरुषः सुख
दुःखानां भोक्तृत्वे हेतुरुच्यते ॥२१॥ पु
रुषः प्रकृतिस्थो हि भुंक्ते प्रकृतिजान्
गुणान् ॥ कारणं गुणसंगोस्य सदसद्यो
निजन्मसु ॥२२॥ उपद्रष्टानुमंता च भ

र्त्ता भोक्ता महेश्वरः ॥ परमात्मेति चा
प्युक्तो देहेस्मिन्पुरुषः परः ॥२२॥
य एवं वेत्ति पुरुषं प्रकृतिं च गुणैः स
ह ॥ सर्वथा वर्त्तमानोपि न स भूयोभि
जायते ॥२३॥ ध्यानेनात्मनि पश्यंति
केचिदात्मानमात्मना ॥ अन्ये सांख्ये
न योगेन कर्मयोगेन चापरे ॥२४॥
अन्ये त्वेवमजानंतः श्रुत्वान्येभ्यः

गी०
११७

न्युपासते ॥ तेपिचातितरंत्येवमृत्युं
श्रुतिपरायणाः ॥२६॥ यावत्संजा
यतेकिंचित्सत्वंस्थावरजंगमंक्षे
त्रक्षेत्रज्ञसंयोगात्तद्विद्धिभरतर्षभ ॥
२७॥ समंसर्वेषुभूतेषुतिष्टंतंपरमे
श्वरं ॥ विनश्यत्स्वविनश्यंतंयःपश्य
तिसपश्यति ॥२८॥ समंपश्यन्
हिसर्वत्रसमवस्थितमीश्वरं ॥ न

हिनस्त्यात्मनात्मानं ततो याति परांगतिं
॥२७॥ प्रकृत्यैव च कर्माणि क्रियमाणा
नि सर्वशः ॥ यः पश्यति तथात्मानमक
र्त्तारं स पश्यति ॥३०॥ यदा भूतपृथग्भा
वमेकस्थमनुपश्यति ततएव च विस्तारं
ब्रह्म संपद्यते तदा ॥३१॥ अनादित्वान्नि
र्गुणत्वात्परमात्मायमव्ययं ॥ शरीरस्थो
पि कौन्तेय न करोति न लिप्यते ॥३२॥

ा०७ यथा सर्वगतं सौक्ष्म्यादाकाशं नोपलिप्यते
१८ सर्वत्रावस्थितो देहे तथात्मा नोपलिप्यते
॥३३॥ यथा प्रकाशयत्येकः कृत्स्नं लोक
मिमं रविः ॥ क्षेत्रं क्षेत्री तथा कृत्स्नं प्र
काशयति भारत ॥३४॥ क्षेत्रक्षेत्रज्ञयोरे
वमंतरं ज्ञानचक्षुषा ॥ भूतप्रकृतिमो
क्षं च ये विदुर्यांति ते परं ॥३५॥ इति
श्रीभगवद्गीतासूपनिषत्सुब्रह्म

विद्यायां योगशास्त्रे श्रीकृष्णार्जु
नसंवादे क्षेत्रक्षेत्रज्ञविभागयो
नाम त्रयोदशोध्यायः ॥१३॥ श्रीभ
गवानुवाच ॥ परं भूयः प्रवक्ष्यामि ज्ञा
नानां ज्ञानमुत्तमं ॥ यज्ज्ञात्वा मुनयः
सर्वे परां सिद्धिमितो गताः ॥१॥ इदं ज्ञा
नमुपाश्रित्य मम साधर्म्यमागताः ॥ सर्गे
पि नोपजायंते प्रलये न व्यथंति च ॥

१० ॥२॥ मम योनिर्महद्ब्रह्म तस्मिन्गर्भं द
१४ धाम्यहं ॥ संभवः सर्वभूतानां ततो भ
वति भारत ॥३॥ सर्वयोनिषु कौंतेय मू
र्त्तयः संभवंति याः ॥ तासां ब्रह्म महद्यो
निरहं बीजप्रदः पिता ॥४॥ सत्वं रजस्त
म इति गुणाः प्रकृतिसंभवाः ॥ निबध्नं
ति महाबाहो देहे देहिनमव्ययं ॥५॥
तत्र सत्वं निर्मलत्वात्प्रकाशकमना

मयं ॥ सुखसंगेन बध्नाति ज्ञानसंगेन
चानघ ॥६॥ रजोरागात्मकं विद्धि तृष्णा
संगसमुद्भवं ॥ तन्निबध्नाति कौंतेय क
र्मसंगेन देहिनं ॥७॥ तमस्त्वज्ञानजं
विद्धि मोहनं सर्वदेहिनां ॥ प्रमादाल
स्यनिद्राभिस्तन्निबध्नाति भारत ॥८॥
सत्वं सुखे संजयति रजः कर्मणि भार
त ॥ ज्ञानमावृत्य तु तमः प्रमादे संजयत्यु

गी॰ त ॥९॥ रजस्तमश्चाभिभूय:सत्वंभव
१२० तिभारत ॥ रजः सत्वं तमश्चैव तमः सत्वं
रजस्तथा ॥१०॥ सर्वद्वारेषु देहेस्मिन्प्र
काश उपजायते ॥ ज्ञानं यदा तदा विद्या
द्विवृद्धं सत्वमित्युत ॥११॥ लोभः प्रवृत्ति
रारंभः कर्मणामशमः स्पृहा ॥ रजस्ये
तानि जायंते विवृद्धे भरतर्षभ ॥१२॥ अ
प्रकाशो प्रवृत्तिश्च प्रमादो मोह एव च ॥

तामस्येतानिजायंतेविव्रद्धेकुरुनंद
न ॥१३॥ यदासत्वेप्रव्रद्धेतुप्रलयंयां
तिदेहभ्रत ॥ तदोत्तमविदांलोकान
मलान्प्रतिपद्यते ॥१४॥ रजसिप्रलयं
गत्वाकर्मसंगिषुजायतेतथाप्रली
नस्तमसिमूढयोनिषुजायते ॥१५॥
कर्मणःसुक्रतस्याहुःसात्विकंनिर्म
लंफलं ॥ रजसस्तुफलंदुःखमज्ञा

गी० नं तमसः फलं ॥१६॥ सत्वात्संजायते ज्ञा
१२१ नं रजसो लोभ एव च ॥ प्रमादमोहौ तमसो
भवतोज्ञानमेव च ॥१७॥ ऊर्द्धं गछंति स
त्वस्था मध्ये तिष्टंति राजसाः जघन्यगु
णवृत्तिस्था अधो गछंति तामसा ॥१८॥
नान्यं गुणेभ्यः कर्त्तारं यदा द्रष्टानुपश्य
ति ॥ गुणेभ्यश्च परं वेत्ति मद्भावं सोधि
गछति ॥१९॥ गुणानेतानतीत्य त्रीन्देही

देहसमुद्भवान् ॥ जन्ममृत्युजरादुःखैर्वि
मुक्तोऽमृतमश्नुते ॥२०॥ अर्जुन उवाच ॥
कैर्लिंगैस्त्रीन्गुणानेतानतीतो भव
ति प्रभो ॥ किमाचारः कथं चैतांस्त्रीन्
गुणानतिवर्तते ॥२१॥ श्रीभगवानु
वाच ॥ प्रकाशं च प्रवृत्तिं च मोहमेव च
पांडव ॥ न द्वेष्टि संप्रवृत्तानि न निवृत्ता
नि कांक्षति ॥२२॥ उदासीनवदासीनो

गी० गुणैर्योनविचाल्यते॥ गुणावर्त्तंतेइत्येवं
१२२ योवतिष्ठतिनेंगते॥२३॥ समदुःखसु
खःस्वस्थःसमलोष्टाश्मकांचनः॥ तु
ल्यप्रियाप्रियोधीरस्तुल्यनिंदात्मसंस्तु
तिः॥२४॥ मानापमानयोस्तुल्यस्तुल्यो
मित्रारिपक्षयोः॥ सर्वारंभपरित्यागीगु
णातीतःसउच्यते॥२५॥ मांचयोव्यभि
चारेणभक्तियोगेनसेवते॥ सगुणान्स

मतीत्यैतान्ब्रह्मभूयाय कल्पते ॥२६॥
ब्रह्मणो हि प्रतिष्ठाहममृतस्या[illegible]व्यय
स्य च ॥ शाश्वतस्य च धर्मस्य सुखस्यै
कांतिकस्य च ॥२७॥ इति श्री भगवद्गी
तासूपनिषत्सु ब्रह्मविद्यायां योगशा
स्त्रे श्रीकृष्णार्जुनसंवादे गुणत्रयवि
भागयोगो नाम चतुर्दशोऽध्याय ॥
१४ ॥ श्री भगवानुवाच ॥ ऊर्द्धमूल

ग्री ७ मधः स्याद्ववमस्य व्यं प्राकुरव्ययं ॥ छंदं
१२३ सिमस्प घर्णो नि यस्तं वेदसवेद वित
॥९॥ अधस्योर्द्धं प्रसता सस्य शारवा
गुण प्रवृद्धा विषय प्रवालः ॥ अधश्च
मूलान्यनु संततानि कर्मानुबंधीनि
मनुष्यलोके ॥२॥ नरूप मस्येह त
थोपलभ्यते नांतो न चादि र्नचसं
प्रतिष्ठा ॥ अश्वत्थमे नं सुविरूढ

मूलमसंगशस्त्रेण दृढेन छित्वा ॥३॥
ततः पदं तत्परिमार्गितव्यं यस्मिन्गता
न निवर्त्तंति भूयः। तमेव चाद्यं पुरुषं
प्रपद्ये यतः प्रवृत्तिः प्रसृता पुराणी
॥४॥ निर्मानमोहा जितसंगदोषा अध्या
त्मनित्या विनिवृत्तकामाः ॥ द्वंद्वै
र्विमुक्ताः सुखदुःखसंज्ञैर्गछंत्यमूढाः
पदमव्ययं तत् ॥५॥ न तद्भासयते सू

गी० र्यो न शशांको न पावकः ॥ यद्गत्वा न नि
१२४ वर्त्तंते तद्धाम परमं मम ॥६॥ ममैवांशो
जीवलोके जीवभूतः सनातनः ॥ मनः
षष्ठानींद्रियाणि प्रकृतिस्थानि क
र्षति ॥७॥ शरीरं यदवाप्नोति यच्चाप्यु
त्क्रामतीश्वरः ॥ गृहीत्वैतानि संयाति वा
युर्गंधानिवाशयात् ॥८॥ उत्क्रामंतं स्थि
तं वापि भुंजानं वा गुणान्वितं ॥ विमूढा

नानुपश्यंति ज्ञानचक्षुषः ॥१०॥ यतंतो
योगिनश्चैनं पश्यंत्यात्मन्यवस्थितं ॥
यतंतोप्यकृतात्मानो नैनं पश्यंत्यचेत
सः ॥११॥ यदादित्यगतं तेजो जगद्भा
सयते खिलं ॥ यच्चंद्रमसि यच्चाग्नौ
तत्तेजो विद्धि मामकं ॥१२॥ गामावि
श्य च भूतानि धारयाम्यहमोजसा
॥ पुष्णामि चौषधीः सर्वाः सोमो भूत्वार

गी०) १२५

सात्मकः ॥१३॥ अहं वैश्वानरो भूत्वा
प्राणिनां देहमाश्रितः ॥ प्राणापानस
मायुक्तः पचाम्यन्नं चतुर्विधं ॥१४॥ स
र्वस्य चाहं हृदि सन्निविष्टो मत्तः स्मृति
र्ज्ञानमपोहनं च ॥ वेदैश्च सर्वैरहमेव
वेद्यो वेदांतकृद्वेदविदेव चाहं ॥१५॥
द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर ए
व च ॥ क्षरः सर्वाणि भूतानि कूटस्थो

क्षरउच्यते ॥१६॥ उत्तमः पुरुषस्त्वन्यः

परमात्मेत्युदाहृतः ॥ यो लोकत्रय

माविश्य विभर्त्यव्यय ईश्वरः ॥१७॥

यस्मात्क्षरमतीतोहमक्षरादपि चो

त्तमः ॥१८॥ यो मामेवमसंमूढो जाना

ति पुरुषोत्तमं ॥ स सर्वविद्भजति मां

सर्वभावेन भारत ॥१९॥ इति गुह्यत

मं शास्त्रमिदमुक्तं मयानघ ॥ एतद्बु

गी०

१२६

द्या बुद्धिमान्स्यात्कृतकृत्यश्च भारत ।

२०॥ इति श्रीभगवद्गीतासूपनिष

त्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णा

र्जुनसंवादे पुरुषोत्तमयोगो नाम

पंचदशोऽध्यायः ॥ श्रीभगवानुवाच

॥ अभयं सत्त्वसंशुद्धिर्ज्ञानयोगव्य

वस्थितिः ॥ दानं दमश्च यज्ञश्च स्वाध्या

यस्तप आर्जवं ॥ १ ॥ अहिंसा सत्यम

क्रोधस्त्यागः शांतिरपैशुनं दया भूते
ष्वलोलुप्त्वं मार्दवं ह्रीरचापलं ॥२॥ तेजः
क्षमा धृतिः शौचमद्रोहो नातिमानिता
॥ भवंति संपदं दैवीमभिजातस्य भा
रत ॥३॥ दंभो दर्पोऽभिमानश्च क्रोधः पा
रुष्यमेव च ॥ अज्ञानं चाभिजातस्य
पार्थ संपदमासुरी ॥४॥ दैवी संपद्वि
मोक्षाय निबंधायासुरी मता ॥ मा शु

गी०७ चः संपदंदैवीमभिजातोसिपांडव ॥५॥
१२७ ॥ द्वौभूतसर्गौलोकेस्मिन्दैवआसुरए
वच ॥ दैवोविस्तरशः प्रोक्तः आसुरंपा
र्थमेशृणु ॥६॥ प्रवृत्तिंचनिवृत्तिंच
जनानविदुरासुराः ॥ नशौचंनापि
चाचारोनसत्यंतेषुविद्यते ॥७॥ अ
सत्यमप्रतिष्ठंतेजगदाहुरनीश्वरं ॥
अपरस्परसंभूतंकिमन्यत्कामहै

तुकं ॥८॥ एतां दृष्टिमवष्टभ्य नष्टात्मा
नोल्पबुद्धयः ॥ प्रभवंत्युग्रकर्माणः
क्षयाय जगतोहिताः ॥९॥ काममाश्रि
त्य दुःपूरं दंभमानमदान्विताः ॥ मोहा
द्गृहीत्वाऽसद्ग्राहान्प्रवर्त्तंतेशुचि
व्रताः ॥१०॥ चिंतामपरमेयां च प्रलयां
तामुपाश्रिताः ॥ कामोपभोगपरमा ए
तावदिति निश्चिताः ॥११॥ आशापाश

गी०अ
१२८

शातैर्वद्धाः कामक्रोधपरायणाः ॥ ईहंते
कामभोगार्थमन्यायेनार्थसंचयान् ॥
॥१२॥ इदमद्यमयालब्धमिदं प्राप्स्ये म
नोरथं ॥ इदमस्तीदमपि मे भविष्य
ति पुनर्धनं ॥१३॥ असौ मया हतः
शत्रुर्हनिष्ये चापरानपि ॥ ईश्वरोहमहं
भोगी सिद्धोहं बलवान्सुखी ॥१४॥
आढ्योभिजनवानस्मि कोन्योस्ति स

दृशो मया ॥ यक्ष्ये दास्यामि मोदिष्य इत्यज्ञा
नविमोहिताः ॥१५॥ अनेकचित्तविभ्रांता
मोहजालसमावृताः ॥ प्रसक्ताः कामभो
गेषु पतंति नरके ऽशुचौ ॥१६॥ आत्मसंभा
विताः स्तब्धा धनमानमदान्विताः ॥ यजंते
नामयज्ञैस्ते दंभेनाविधिपूर्वकं ॥१७॥
अहंकारं बलं दर्पं कामं क्रोधं च संश्रिताः
मामात्मपरदेहेषु प्रद्विषंतो ऽभ्यसूयकाः

गी०
१२९

॥१८॥ तानहं द्विषतः क्रूरान्संसारेषु नरा
धमान् ॥ क्षिपाम्यजस्रमशुभानासुरीष्वे
व योनिषु ॥१९॥ आसुरीं योनिमापन्ना मू
ढा जन्मनि जन्मनि ॥ मामप्राप्यैव कौंते
य ततो यांत्यधमां गतिं ॥२०॥ त्रिविधं नरक
स्येदं द्वारं नाशनमात्मनः ॥ कामः क्रोधस्त
था लोभस्तस्मादेतत्त्रयं त्यजेत् ॥२१॥
एतैर्विमुक्तः कौंतेय तमोद्वारैस्त्रिभिर्नरः

॥ आचरत्यात्मनः श्रेयस्ततो याति परां
गतिं ॥२२॥ यः शास्त्रविधिमुत्सृज्य व
र्तते कामकारतः ॥ न स सिद्धिमवा
प्नोति न सुखं न परां गति ॥२३॥ तस्मा
च्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थि
तौ ॥ ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तु
मिहार्हसि ॥२४॥ इति श्रीमद्भगवद्गीता
सूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे
श्रीकृष्णार्जुनसंवादे दैवासुरसं

गी० पत्तियोगो नाम षोडशोऽध्याय ॥
१३० १६॥ अर्जुनोवाच ॥ येशास्त्रविधि
मुत्सृज्य यजंते श्रद्धयान्विताः ॥ तेषां
निष्ठा तु का कृष्ण सत्वमाहोरजस्तमः
॥१॥ श्रीभगवानुवाच ॥ त्रिविधा
भवति श्रद्धा देहिनां सा स्वभावजाः ॥ सा
त्विकी राजसी चैव तामसी चेति तांशृ
णु ॥२॥ सत्वानुरूपा सर्वस्य श्रद्धा

नवति भारत ॥ श्रद्धामयोयं पुरुषो
योयछ्रद्धः स एव सः ॥३॥ यजंते सा
त्विका देवान् यक्षरक्षांसि राजसाः
॥ प्रेतान्भूतगणांश्चान्ये यजंते ता
मसा जनाः ॥४॥ अशास्त्रविहितं घो
रं तप्यंते ये तपो जनाः ॥५॥ दंभाहंका
रसंयुताः कामरागबलान्विताः ॥५॥
कर्षयंतः शरीरस्थं भूतग्राममचेतसः ॥

गी०७ मांचैवांतःशरीरस्थं तान्विध्यासुरनि
१३१ श्चयान् ॥६॥ आहारस्त्वपिसर्वस्यत्रि
विधोभवतिप्रियः ॥ यज्ञस्तपस्तथादा
नंतेषांभेदमिमंशृणु ॥७॥ आयुः
सत्वबलारोग्यसुखप्रीतिविवर्द्ध
नाः ॥ रस्याःस्निग्धाःस्थिराहृद्याआ
हाराःआहाराःसात्विकप्रियाः ॥८॥
कट्वम्ललवणात्युष्णतीक्ष्णरू

क्षविदाहिनः ॥ आहारा राजसस्येष्टाः
दुःखशोकामयप्रदाः ॥९॥ यातया
मं गतरसं पूतिपर्युषितं च यत । उछि
ष्टमपि चामेध्यं भोजनं तामसप्रिय
॥१०॥ अफलाकांक्षिभिर्यज्ञो विधि
दृष्टो य इज्यते । यष्टव्यमेवेति मनः स
माधाय स सात्विकः ॥११॥ अभिसं
धाय तु फलं दंभार्थमपि चैव यत ॥

गी०१७
१३२

इज्यते भरतश्रेष्ठ तं यज्ञं विद्धि राजसं
॥१२॥ विधिहीनमसृष्टान्नं मंत्रहीन
मदक्षिणं ॥ श्रद्धाविरहितं यज्ञं ताम
सं परिचक्षते ॥१३॥ देवद्विजगुरुप्राज्ञ
पूजनं शौचमार्जवं ॥ ब्रह्मचर्यमहिं
सा च शारीरं तप उच्यते ॥१४॥ अनुद्वे
गकरं वाक्यं सत्यं प्रियहितं च यत् ॥ स्वा
ध्यायाभ्यसनं चैव वाङ्मयं तप उच्यते

॥१५॥ मनःप्रसादः सौम्यत्वं मौनमात्म
विनिग्रहः॥ भावसंशुद्धिरित्येतत्तपो
मानसमुच्यते ॥१६॥ श्रद्धया परया त
प्तं तपस्तत्त्रिविधं नरैः॥ अफलाकांक्षि
भिर्युक्तैः सात्विकं परिचक्षते ॥१७॥
सत्कारमानपूजार्थं तपो दंभेन चैव य
त्॥ क्रियते तदिह प्रोक्तं राजसं चल
मध्रुवं ॥१८॥ मूढग्राहेणात्मनो य

गी०१७ त्पीडया क्रियते तपः॥ परस्योत्सादना
१२३ र्थं वा तत्तामसमुदाहृतं ॥१९॥ दात
व्यमिति यद्दानं दीयतेनुपकारिणे॥ दे
शे काले च पात्रे च तद्दानं सात्विकं स्मृ
तं ॥२०॥ यत्तु प्रत्युपकारार्थं फलमुद्दि
श्य वा पुनः॥ दीयते परि। क्लिष्टं तद्राज
समुदाहृतं ॥२१॥ उपसत्कृतमवज्ञातं
तत्तामसमुदाहृत ॥२२॥ ॐ तत्सदिति
× अदेशकाले यद्दानमपात्रेभ्यश्च दीयते ॥ को० ७

निर्देशोब्रह्मणस्त्रिविधःस्मृतः॥
ब्राह्मणास्तेनवेदाश्चयज्ञाश्चविहिताः
पुरा॥२३॥तस्मादोमित्युदाहृत्ययज्ञ
दानतपःक्रियाः॥प्रवर्त्तंतेविधानो
क्ताःसततंब्रह्मवादिनांतदित्यनभि
संधायफलंयज्ञतपःक्रियाः॥दान
क्रियाश्चविविधाःक्रियंतेमोक्षकां
क्षिभिः॥२५॥सद्भावेसाधुभा

वेचसदित्येतत्प्रयुज्यते ।। प्रशस्तेकर्म
णितथासछब्दः पार्थयुज्यते ।।२६।। य
ज्ञेतपसिदानेच स्थितिः सदितिचोच्य
ते ।। कर्मचैवतदर्थीयं सदित्येवाभिधी
यते ।।२७।। अश्रद्धयाहुतंदत्तंतपस्त
प्तंकृतंचयत ।। असदित्युच्यतेपार्थन
चतत्प्रेत्यनोइह ।।२८।। इतिश्रीभग
वद्गीतासूपनिषत्सुब्रह्मविद्यायां

योगशास्त्रे श्रीकृष्णार्जुनसंवादे त्रि
गुणविभागयोगो नाम सप्तदशोध्या
यः ॥१७॥ अर्जुनोवाच ॥ संन्यास
स्य महाबाहो तत्त्वमिछामि वेदितुं ॥ त्या
गस्य च हृषीकेश पृथक्केशि ॥ निसूदन
॥१॥ श्रीभगवानुवाच ॥ काम्यानां क
र्मणां न्यासं संन्यासं कवयो विदुः ॥
सर्वकर्मफलत्यागं प्राहुस्त्यागं वि

गी॰ चक्षणः ॥२॥ त्याज्यं दोषवदित्येके कर्म
१३५ प्राहुर्मनीषिणः यज्ञदानतपः कर्म न
त्याज्यमिति चापरे ॥३॥ निश्चयं श्रृणु
मे तत्र त्यागे भरतसत्तम ॥ त्यागो हि पु
रुषव्याघ्रः त्रिविधः संप्रकीर्तितः ॥
४॥ यज्ञदानतपः कर्म न त्याज्यं कार्य
मेव तत् ॥ यज्ञो दानं तपश्चैव पावना
नि मनीषिणां ॥५॥ एतान्यपि तु कर्

णि तु संगं त्यक्त्वा फलानि च ॥ कर्त्तव्या
नीति मे पार्थ निश्चितं मतमुत्तमं ॥६॥
नियतस्य तु संन्यासः कर्मणो नोपप
द्यते ॥ मोहात्तस्य परित्यागस्तामसः प
रि कीर्त्तितः ॥७॥ दुःखमित्येव यत्क
र्म कायक्लेशभयात्त्यजेत् ॥ स कृत्वा रा
जसं त्यागं नैव त्यागफलं लभेत् ॥८॥
कार्यमित्येव यत्कर्म नियतं क्रियतेर्जु

गी०७ न॥ संगं त्यक्त्वा फलं चैव स त्यागः सात्वि
१३६ को मतः॥९॥ न द्वेष्ट्यकुशलं कर्म कुशले
नानुषज्जते॥ त्यागी सत्वसमाविष्टो मे
धावी छिन्नसंशयः॥१०॥ न हि देहभृ
ता शक्यं त्यक्तुं कर्माण्यशेषतः॥ यस्तु
कर्मफलत्यागी स त्यागीत्यभिधीयते
॥११॥ अनिष्टमिष्टं मिश्रं च त्रिविधं क
र्मणः फलं॥ भवत्यत्यागिनां प्रेत्य न तु

सं न्यासिनां क्कचित् ॥१२॥ पंचैतानि मह
बाहो कारणानि निबोध मे ॥ सांख्ये कृतां
ते प्रोक्तानि सिद्धये सर्व कर्मणां ॥१३॥
अधिष्ठानं तथा कर्त्ता करणं च पृथ
ग्विधं ॥ विविधाश्च पृथक् चेष्टा दैवं चै
वात्र पंचमं ॥१४॥ शरीरं वाङ्मनोभि
र्य त्कर्म प्रारभते नरः ॥ न्याय्यं वा विपरी
तं वा पंचैते तस्य हेतव ॥१५॥ तत्रैवं स

गी० तिकर्त्तारमात्मानंकेवलंतुयः॥पश्यत्यकृ
१२७ तबुद्धित्वान्नसपश्यतिदुर्मति॥१६॥य
स्यनाहंकृतोभावोबुद्धिर्यस्यनलिप्यते
॥हत्वापिसइमांल्लोकान्नहंतिननिब
ध्यते॥१७॥ज्ञानंज्ञेयंपरिज्ञातात्रिविधा
कर्मचोदना॥करणंकर्मकर्त्तेतित्रिवि
धःकर्मसंग्रहः॥१८॥ज्ञानंकर्मचकर्त्ता
चत्रिधैवगुणभेदतः॥प्रोच्यतेगुणसं

ख्याने यथावच्छृणु तान्यपि ॥१९॥ स
र्वभूतेषु येनैकं भावमव्ययमीक्षते
ते ॥ अविभक्तं विभक्तेषु तज्ज्ञानं विद्धि
सात्विकं ॥२०॥ पृथक्त्वेन तु यज्ज्ञानं
नानाभावान्पृथग्विधान् वेत्ति सर्वे
षु भूतेषु तत्ज्ञानं विद्धि राजसं ॥२१॥
यत्तु कृत्स्नवदेकस्मिन्कार्ये सक्तमहै
तुकं ॥ अतत्त्वार्थवदल्पं च तत्ताम

१३९ समुदाहृतं ॥२२॥ नियतं संगरहितमरा
गी० गद्वेषतः कृतं ॥ अफलप्रेप्सुना कर्म
यत्तत्सात्विकमुच्यते ॥२३॥ ऽफल
प्रेप्सुना कर्म साहंकारेण वा पुनः ॥ क्रि
यते बहुलायासं तद्राजसमुदाहृतं
॥२४॥ अनुबंधं क्षयं हिंसामनवेक्ष्य
च पौरुषं ॥ मोहादारभ्यते कर्म तत्ता
मससमुदाहृतं ॥२५॥ मुक्तसंगोनहंवा

दीधृत्युत्साहसमन्वितः ॥ सिद्ध्यसि
द्ध्योर्निर्विकारः कर्त्ता सात्विक उच्यते
॥२६॥ रागी कर्मफलप्रेप्सुर्लुब्धो हिं
सात्मकोऽशुचिः ॥ हर्षशोकान्वितः क
र्त्ता राजसः परिकीर्त्तितः ॥२७॥ अयु
क्तः प्राकृतः स्तब्धः शठो नैष्कृतिको ल
सः विषादी दीर्घसूत्री च कर्त्ता तामस
उच्यते ॥२८॥ बुद्धेर्भेदं धृतेश्चैव गुणत

स्त्रिविधं शृणु ॥ प्रोच्यमानमशेषेण पृथ
क्त्वेन धनंजय ॥२९॥ प्रवृत्तिं च निवृत्तिं
च कार्याकार्ये भयाभये बंधं मोक्षं च या
वेत्ति बुद्धिः सा पार्थ सात्त्विकी ॥३०॥ यया
धर्ममधर्मं च कार्यं चाकार्यमेव च ॥ अ
यथावत्प्रजानाति बुद्धिः सा पार्थ राजसी
॥३१॥ अधर्मं धर्ममिति या मन्यते तम
सावृता ॥ सर्वार्थान्विपरीतांश्च बुद्धिः

सापार्थतामसी ॥ ३२ ॥ धृत्यायययाधा
रयतेमनःप्राणेंद्रियक्रियाः ॥ योगेना
व्यभिचारिण्याधृतिःसापार्थसात्वि
की ॥ ३३ ॥ ययातुधर्मकामार्थान्धृ
त्याधारयतेर्जुन ॥ प्रसंगेनफलाकां
क्षीधृतिःसापार्थराजसी ॥ ३४ ॥ यया
स्वप्नंभयंशोकंविषादंमदमेवच ॥ नवि
मुंचतिदुर्मेधाःधृतिःसापार्थतामसी

गी०॥ ॥३५॥ सुखंत्विदानींत्रिविधंशृणुमे
१४० भरतर्षभ॥ अभ्यासाद्रमतेयत्रदुःखां
तंचनिगछति॥३६॥ यत्तदग्रेविषमिव
परिणामेमृतोपमं॥ तत्सुखंसात्वि
कंप्रोक्तमात्मबुद्धिःप्रसादजं॥३७॥वि
षयेंद्रियसंयोगाद्यत्तदग्रेऽमृतोपमं
॥ परिणामेविषमिवतत्सुखंराजसं
स्मृतं॥३८॥ यदग्रेचानुबंधेचसुखं

मोहनमात्मनः ॥ निद्रालस्यप्रमादोत्थं
तत्तामसमुदाहृतं ॥३९॥ नतदस्तिपृथि
व्यांवादिविदेवेषुवापुनः ॥ सत्वंप्रकृति
जैर्मुक्तंयदेभिःस्यात्त्रिभिर्गुणैः ॥४०
॥ ब्राह्मणक्षत्रियविशांशूद्राणांचपरं
तपकर्माणिप्रविभक्तानिस्वभावप्रभ
वैर्गुणैः ॥४१॥ शमोदमस्तपःशौचं
क्षांतिरार्जवमेवच ॥ ज्ञानंविज्ञानमा

गी०१ स्तिक्यंब्रह्मकर्मस्वभावजं ॥४१॥ शौर्यं
१४९ तेजोधृतिर्दाक्ष्यं ॥ युद्धेचाप्यपलायनंदा
नमीश्वरभावश्चक्षात्रंकर्मस्वभावजं
॥४२॥ कृषिगौरक्ष्यवाणिज्यंवैश्यकर्म
स्वभावजं ॥ परिचर्यात्मकंकर्मशूद्रस्या
पिस्वभावजं ॥४४॥ स्वेस्वेकर्मण्यभिरतः
संसिद्धिंलभतेनरः ॥ स्वकर्मनिरतःसि
द्धिंयथाविंदतितच्छृणु ॥४५॥ यतःप्र

वृत्तिर्भूतानां येन सर्वमिदं ततं ॥ स्वक
र्मणा तमभ्यर्च्य सिद्धिं विंदति मानवः ॥
४६ ॥ श्रेयान्स्वधर्मो विगुणः परधर्मात्
स्वनुष्ठितात् ॥ स्वभावनियतं कर्म कुर्व
न्नाप्नोति किल्बिषं ॥४७॥ सहजं कर्म
कौंतेय सदोषमपि न त्यजेत् ॥ सर्वारंभा
हि दोषेण धूमेनाग्निरिवावृता ॥४८॥ अ
सक्तबुद्धिः सर्वत्र जितात्मा विगतस्पृ

गी॰ १८ हः नैष्कर्म्य सिद्धिं परमां संन्यासेनाधि
१४२ गछति ॥४९॥ सिद्धिं प्राप्तो यथा ब्रह्म तथा
प्नोति निबोध मे ॥ समासेन तु कौं
तेय निष्ठा ज्ञानस्य या परा ॥५०॥ बुद्ध्या
विशुद्धया युक्तो धृत्यात्मानं नियम्य च
॥ वि शब्दादीन्विषयांस्त्यक्त्वा रागद्वेषौ व्यु
दस्य च ॥५१॥ विविक्तसेवी लघ्वाशी य
तवाक्कायमानसः ॥ ध्यानयोगपरो नि

त्यं वैराग्यं समुपाश्रितः ।।५२।। अहंकारं
बलं दर्पं कामं क्रोधं परिग्रहं ।। विमुच्य
निर्ममः शांतो ब्रह्मभूयाय कल्पते ।।
५३ ।। ब्रह्मभूतः प्रसन्नात्मा न शोचति
न कांक्षति ।। समः सर्वेषु भूतेषु मद्भक्तिं
लभते परां ।।५४।। भक्त्या मामभिजाना
ति यावान्यश्चास्मि तत्वतः ततो मां त
त्वतो ज्ञात्वा विशते तदनंतरं ।।५५।।

गी०
१४३

सर्वकर्माण्यपि सदा कुर्वाणो मद्व्यपाश्र
यः ॥ मत्प्रसादादवाप्नोति शाश्वतं पदम
व्ययं ॥५६॥ चेतसा सर्वकर्माणि मयि
संन्यस्य मत्परः ॥ बुद्धियोगमुपाश्रित्य
मच्चित्तः सततं भव ॥५७॥ मच्चित्तः स
र्वदुर्गाणि मत्प्रसादात्तरिष्यसि ॥ अथ
चेत्त्वमहंकारान्न श्रोष्यसि विनंक्ष्य
सि ॥५८॥ यदहंकारमाश्रित्य न योत्स्य

इति मिन्यसे ॥ मिथ्यैष व्यवसायस्ते प्र
कृतिस्त्वां नियोक्ष्यसि ॥५९॥ स्वभावजे
न कौंतेय निबद्धः स्वेन कर्मणा ॥ कर्तुं
नेछसि यन्मोहात्करिष्यस्यवशोपि तत्
॥६०॥ ईश्वरः सर्वभूतानां हृद्देशेर्जु
न तिष्ठति ॥ भ्रामयन्सर्वभूतानि यं
त्रारूढानि मायया ॥६१॥ तमेव श
रणं गछ सर्वभावेन भारत ॥ तत्प्रसा

गी० दात्परां शांतिं स्थानं प्राप्स्यसि शाश्वतं ॥६२॥
१५४ इति ते ज्ञानमाख्यातं गुह्याद्गुह्यतरं मया
॥ विमृश्यैतदशेषेण यथेच्छसि तथा कुरु
॥६३॥ सर्वगुह्यतमं भूयः शृणु मे परमं
वचः ॥ इष्टोसि मे दृढमिति ततो वक्ष्यामि
ते हितं ॥६४॥ मन्मना भव मद्भक्तो मद्या
जी मां नमस्कुरु मामेवैष्यसि सत्यं ते
प्रतिजाने प्रियोसि मे ॥६५॥ सर्वधर्मा

न्परित्यज्य मामेकं शरणं व्रज ॥ अहं
त्वां सर्वपापेभ्यो मोक्षयिष्यामि मा शु
च ॥६६॥ इदं ते नातपस्काय नाभक्ता
य कदाचन ॥ न चाशुश्रूषवे वाच्यं
न च मां योभ्यसूयति ॥६७॥ य इमं प
रमं गुह्यं मद्भक्तेष्वभिधास्यति ॥ भक्तिं
मयि परां कृत्वा मामेवैष्यत्यसंशयः
॥६८॥ न च तस्मान्मनुष्येषु कश्चि
ने

गी० ७ न्मे प्रियकृत्तमः ॥ भविता न च मे तस्मा
१४५ दन्यः प्रियतरो भुवि ॥६९॥ अध्येष्यते
च य इमं धर्म्यं संवादमावयोः ॥ ज्ञानय
ज्ञेन तेनाहमिष्टः स्यामिति मे मतिः ॥
७०॥ श्रद्धावाननसूयश्च शृणुया
दपि यो नरः ॥ सोपि मुक्तः शुभाल्लोका
न्प्राप्नुयात्पुण्यकर्मणां ॥७१॥ क
च्छ्रुतं पार्थ त्वयैकाग्रेण चेतसा कच्चि

दज्ञानसंमोहः प्रणष्टस्ते धनंजय ॥ ७
२ ॥ अर्जुन उवाच ॥ नष्टो मोहः स्मृति
र्लब्धा त्वत्प्रसादान्मयाच्युत ॥ स्थि
तोस्मि गतसंदेहः ॥ करिष्ये वचनं
तव ॥ ७३ ॥ संजय उवाच ॥ इत्यहं
वासुदेवस्य पार्थस्य च महात्मनः ॥
संवादमिममश्रौषमद्भुतं रोमहर्षणं
॥ ७४ ॥ व्यासप्रसादाछ्रुतवानेतद्गुह्य

गी० महं परं ॥ योगं योगेश्वरात् कृष्णात्सा
१४८ क्षात्कथयतः स्वयं ॥७५॥ राजन् सं
स्मृत्य संस्मृत्य संवादमिममद्भुतं के
शवार्जुनयोः पुण्यं हृष्यामि च मुहुर्मु
हुः ॥७६॥ तच्च संस्मृत्य संस्मृत्य रूप
मत्यद्भुतं हरेः विस्मयो मे महान् राज
न् हृष्यामि च पुनः पुनः ॥७७॥ यत्र यो
गेश्वरः कृष्णो यत्र पार्थो धनुर्धरः ॥

तत्र श्री र्विजयो भूति र्ध्रुवा नीति र्मति

र्मम ॥७८॥ इति श्री भगवद्गीता सू

पनिषत्सु ब्रह्मविद्यायां योगशास्त्रे

श्रीकृष्णार्जुनसंवादे मोक्षयोगो ना

माष्टादशोऽध्यायः ॥१८॥ पुस्तक दे

व लीया लधूरामरो छै दशकतेख

धूरामरा छै संमत १८९४ मतीजेष्ठ

सुदी ३ तीज वार सोमवार ॥ श्री ॥ 515

गी०) १४७

॥श्री जगन्नाथराय जी आपालिख
हैं भगवत माहात्म सनक हो है सो
क॥ एकं शास्त्रं देवकीपुत्रगीतं मे
को देवो देवीपुत्र एव ॥ मंत्रोप्येकस्त
स्य नामानि यानि कर्माप्येकस्तस्य दे
वस्य सेवा ॥ [illegible] दशम को ध्या
नमामि हृदये शेषे लीलाक्षीराब्धिशायि
नं ॥ लक्ष्मीसहस्रलीलाभिः सेव्यमानं कल
निधिं ॥१॥